Bhatrihari

Nitishatak satika

नीतिशतक सटीका

Sanskrit

Paper - Printed

N. A. (very old)

33 Folio

9.6"x 4.5"



Complete

# अथभर्तृहरिकृतनीतिशतकसटीकप्रारंभोयं.

भ॰नी १

श॰ १

श्रीगणेशायनमः॥ विघ्नेशंविघ्नहर्तारंगणराजंनमाम्यहम् शारदांवरदांनौमिजाड्यापन्नुत्तयेतथा १

श्रीगोपालंनमस्कृत्यनत्वागुरुपरंपराम् भर्तृहरिणाकृतोग्रंथस्तस्यव्याख्यांकरोम्यहम् २ दिगिति

दशादिशाश्च तथाभूतभविष्यद्वर्तमानात्रिकालेषुचअनवच्छिन्नः अतएव अनंतः अंतोनास्तिचि-

न्मात्रमेवज्ञानंमूर्तिः स्वरूपंयस्य तथास्वानुभूतिः स्वस्यअनुभवः सएवसारांशोयस्यएताहृशंशांतं

दिक्कालाद्यनवच्छिन्नानंतचिन्मात्रमूर्तये स्वानुभूत्येकसारायनमःशांतायतेजसे १

यत्तेजः ब्रह्मरूपं तस्मैनमः ग्रंथादौग्रंथमध्येग्रंथांतेमंगलमाचरणीयमितिशि

ष्टाचारोस्ति अतोग्रंथकर्त्रामंगलंनमनात्मकंकृतं प्रयोजनमनुद्दिश्यनमंदोपिप्रवर्त्तते एवंनाति १

वर्तते नर्हिकेनकारणेनग्रंथःकृतस्तत्कारणंयेनवैराग्योत्पत्तिस्तद्धिखति १ ॥ ७ ॥

धिग्योगे द्वितीया भवति अतो द्वितीया विभक्तिरुक्ता राज्ञा विक्रमशकेन स्वलब्धं फलं कस्मैचिद्ब्रा
ह्मणाय दत्तं तस्य फलस्य महिमा येन भक्षितं स अमरो भवति मरणं नास्ति तत्फलं ब्राह्मणेन मन
सि विचार्य बहूनां पालको राजा भर्तृहरिस्तस्मै दत्तं तेन भर्तृहरिणा स्वपत्नी प्रियतमा तस्यै दत्तं त
यापि कश्चन जारस्तस्मै दत्तं जारेणापि स्वस्य प्रिया काचन पुंश्चली तस्यै दत्तं तत्फलं एकस्मिन् दिने

यां चिंतयामि सततं मयि सा विरक्ता साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः

पुंश्चलीसमीपे राज्ञा दृष्टं पश्चात् शोधः कृतः तावत्सर्वापरं ज्ञातं पश्चाद्वैराग्येण निंदति अहं यां
स्वस्त्रियं चिंतयामि प्राणादधिका सापि विरक्ता सा स्त्री अन्यजारं प्रियतमं इच्छति सोपि अन्यां पुं
श्चलीं प्रियत्वेनेच्छति एवं मदर्थेपि काचन स्त्री मया सह संगो भवितव्यमिति मनसि संतुष्टिमान

भ॰नी॰ यिष्यति एवंनकश्चित्कस्यापिस्त्रियः अतोनिंदति सापुंश्चलीतांधिक् सजारः तंधिक् इयंमदीया श॰
२ स्त्रीइमांचधिक् अहमपिएतादृशोमूर्खः मांचाधिक् इदंसर्वंमदनकृतंज्ञातमतोमदनंचधिक् १
२ एवंज्ञातेसतिस्वास्मिन्मूर्खत्वंज्ञातमतोमूर्खलक्षणानिवदति अज्ञेति यःकेवलंनजा
नातिसअज्ञः मूर्खः सतुशिष्टेनयुक्तायुक्तमुक्तंतच्छृणोति तथैवकरोति अतःसुखेन आराधि

अस्मत्कृतेचपरितुष्यतिकाचिदन्याधिक्तांचतंचमदनंचइमांचमांच २

अज्ञःसुखमाराध्यःसुखतरमाराध्यतेविशेषज्ञः तुंवशीकर्तुंशक्यः यस्तु

विशेषंयुक्तायुक्तंजानातिसविशेषज्ञः कदाचित्प्रमादादयुक्तेकर्मणिप्रवृत्तःसन् अपरेणनिवा २
रितश्चेत्शृणोतिसचअत्यंतंवशीकर्तुंशक्यः अधुनाउभयोर्विलक्षणः अज्ञोनभवतिपूर्णज्ञाना–

पिनभवतिशास्त्रेप्रवेशोनास्तिबहुश्रुतनयास्वास्मिन्पंडितंमन्यतयापरस्यवचनंनशृणोति किं-
चित् ज्ञानलवेनदुर्विदग्धोगर्विष्ठस्तंवशीकर्तुंब्रह्मापिनशक्तः इतरेषांकावार्त्ता २ प्रसह्येति
अधुनामूर्खः सन्प्रतिनिविष्टचित्तस्तस्यचित्तमाराधितुंनशक्यं आराधनाभावेदृष्टांतेनवदति

ज्ञानलवदुर्विदग्धंब्रह्मापितंनरंनरंजयति २ प्रसह्यमणिमुद्धरेन्मकरव
क्त्रदंष्ट्रांकुरात्समुद्रमपिसंतरेत्प्रचलदूर्मिमालाकुलम्

मकरोनामझ
षविशेषस्तस्यवक्त्रेदंष्ट्रांकुरस्तास्मिन्मणिः समणिः प्रसह्यबलात्कारेणनिष्कासितुंशक्यः भ
वेत्मकरवक्त्रेमणेरभावएवसोपिकालेनभावोभविष्यति तथाच प्रचलंतीनांऊर्मीणांलह
रीणांमालाः समुदायास्तैराकुलंसमुद्रमपिबाहुभ्यांसंतरेत् तथाच कोपितंभुजंगंशिरसि

पुष्पवद्धारयेत् एतेअघटितादृष्टांताः कालेनभविष्यंति परंतु प्रतिनिविष्टआविष्टचित्तः
सन् यत्किंचित् मनसिधृतंनत्यजति कस्यापिवचनंनशृणोति तस्य मूर्खस्यचित्तमाराधितुंनश
क्यं ज्ञातापिआविष्टचित्तःसन् यत्किंचित्करोति स्वहितंनजानातिसोपिमूर्खोतःपातिरेव पश्चात्

भुजंगमपिकोपितंशिरसिपुष्पवद्धारयेन्नतुप्रतिनिविष्टमूर्खजनचित्तमारा
धयेत् ४ लभेच्चसिकतासुतैलमपियत्नतःपीडयन्पिबेच्चमृगतृष्णिकासुस
लिलंपिपासार्दितः

वणदुर्योधनादयः ४ लभेदिति सिकतासुवालुकासु
तैलंयत्नतः प्रयासेनपीडयन् सन् कदाचित्लभेत् तथाच तृषार्त्तः सन् मृगतृष्णिकासुसलिलं २
कदाचित् पिबेत् कदाचित्पृथ्वींपर्यटन् सन् शशस्यविषाणंशृंगंप्राप्नुयात्. एवमघटितघट

स्तीसमदः निशितेन अंकुशेनतीक्ष्णेनवारयितुंशक्याः दंडेनगौर्हषभोगर्दभोवा भेषजेन औषधविधिनानियमेनव्याधिर्वा मंत्रप्रयोगैर्विषंवा एवंसर्वस्यशास्त्रविहितमौषधंनिरस नप्रकारोऽस्तिपरंतुमूर्खस्यमूर्खत्वनिरसनरूपंकुत्राप्यौषधंनास्तीति ११ साहित्यसंगीतस्यक

व्याधिर्भेषजसंग्रहैश्चविविधैर्मंत्रप्रयोगैर्विषंसर्वस्यौषधमस्तिशास्त्रविहितं
मूर्खस्यनास्त्यौषधम् ११ साहित्यसंगीतकलाविहीनः साक्षात्पशुः पुच्छविषाण
हीनः तृणंनखादन्नपिजीवमानस्तद्भागधेयंपरमंपशूनाम् १२ लानामनभि-

ज्ञः ज्ञानंनास्ति एवंभूतोयोनरः सपुच्छविषाणरहितः साक्षात्पशुरेवनहियदापशुस्तदालेनतृणं भक्षणीयंतत्तुननखादतिजीवत्यपि इदंतु इनरपशूनांपरममुत्कृष्टंभागधेयमदृष्टम् १२ ७

येषामिति येषांनविद्यानतपोनदानंनशीलंसद्वृत्तंनदपिचनगुणः सत्वगुणोनधर्मोएवंभूता
येमनुष्यास्तेअस्मिन्मर्त्यलोकेभुविभारभूताः संतोमनुष्यरूपेणमृगाएवविचरंति १३ वर

येषांनविद्यानतपोनदानंज्ञानंनशीलंनगुणोनधर्मः तेमर्त्यलोकेभुवि-
भारभूतामनुष्यरूपेणमृगाश्चरंति १३ वरंपर्वतदुर्गेषुभ्रांतंवनचरैः
सह नमूर्खजनसंपर्कःसुरेंद्रभवनेष्वपि १४ शास्त्रोपस्कृतशब्दसुंदर
गिरःशिष्यप्रदेयागमाविख्याताःकवयोवसंतिविषयेयस्यप्रभोर्निर्धनाः

मिति पर्वतदुर्गेषुवनचरैः व्याघ्रादिभिःसहभ्रमणंवरमुत्कृष्टं परंतुमूर्खजनसंबंधः इंद्रभवने
ष्वपिमास्त्विति १४ इतिअज्ञानिंदाप्र॰ अथविद्वत्प्रशंसा व्याकरणाभिधानादिभिःशा

स्त्रैरुपस्कृताः शिक्षिताः शब्दास्तैः सुंदरागीर्वाणीयेषांते तथाच शिष्येभ्यः प्रदेयादत्ताः पाठिताःआ
गमावेदशास्त्राणियैस्ते तथाच सर्वलोकेषु विख्याताः प्रसिद्धाः कवयः कवित्वं कुर्वाणाः एवंभूता-
विद्वांसोयस्यप्रभोर्विषयेदेशमध्येवसंति अथच निर्धनाधनरहिताः राजातान्नैव जानाति परामृशंत

तज्जाड्यंवसुधाधिपस्यकवयोह्यर्थंविनापीश्वराः कुत्साः स्युः कुपरीक्षका हि
मणयोयैरर्घतः पातिताः १५

गृण्हाति तत् वसुधाधिपस्य राज्ञः जाड्यंमौर्ख्यं
कवयस्तु सुधियः ते अर्थंविनापीश्वराः समर्थाः यथा महामणयोबहुमूल्यास्तेकुपरीक्षकैः कुत्सि
तपरीक्षकैः अज्ञात्वा अर्घतोमूल्यतः पातिताः न्यूनमूल्याः कृताः तर्हि अयंदोषः परीक्षकाणांमणी
नांपरीक्षकाः कुत्साः स्युः कुत्सिता एव नतु मणयः १५ ७ ७

भ·नी· हर्तुरिति भोनृपाः राजानः येषांविद्याख्यमंतर्धनंवर्ततेतान्प्रतिमानमहंकारंउज्झततस्यजत कं- शा·
७ थंभूतंविद्याख्यंधनं हर्तुः तस्करस्ययत् गोचरंनयाति तस्यदृश्यंनभवति पुनः कथंभूतंकिमपि १
अनिर्वचनीयंशंसुखंपुष्णाति पुष्टिंप्रापयति पुनः कथंभूतं सर्वदासर्वकालेष्वपि अर्थिभ्यः शि

हर्तुर्यातिनगोचरंकिमपिशंपुष्णातियत्सर्वदाह्यर्थिभ्यःप्रतिपाद्यमानमनिशं
प्राप्नोतिवृद्धिंपराम् कल्पांतेष्वपिनप्रयातिनिधनंविद्याख्यमंतर्धनंयेषांतान्
प्रतिमानमुज्झतनृपाः कस्तैःसहस्पर्धते १६

ष्येभ्यः प्रतिपाद्यमानं दत्तंपराम्पु
त्कृष्टांवृद्धिंप्राप्नोति पुनः कल्पांतेष्वपि निधनंनाशंनप्रयातिनप्राप्नोति एतादृशंयेषामंतर्धनंतैः ७
सहकः स्पर्धतेस्पर्धांकरोति १६

अधिगतेति अधिगतः प्राप्तः परमार्थो यैः तान्प्रति मा मवस्थाः तेषामपमानं मा कुरु तान्प्रति ल
क्ष्मीः लघुतृणमिव लक्ष्मीस्तान्नैव संरुणद्धि रोद्धुं न शक्नोति अत्र दृष्टांतः अभिनवास्कंदराम
दजललेखातथाश्यामायमानानि गंडस्थलानि येषां ते एवंभूतानां वारणानां गजानां विसतंतुः क

अधिगतपरमार्थान्पंडितान्मावमंस्थास्तृणमिवलघुलक्ष्मीर्नैवतान्संरुणद्धि
अभिनवमदलेखाश्यामगंडस्थलानां नभवति विसतंतुर्वारणं वारणानाम् १७
अंभोजिनीवननिवासविलासमेव हंसस्य हंति नितरां कुपितो विधाता मलकेसर

तंतुः किं वारणं भवति रोद्धुं शक्नोति अतः पंडितानां अवज्ञा न कर्त्तव्येत्यर्थः १७ योयस्य स्वाभाविकः
सद्गुणस्तं गुणं न कोपि हर्तुं शक्नोति अत्र दृष्टांतः अंभसो जाताः कमलिन्यः तासां वनं तत्र निवासः वस

ति स्थानं तेन धिलसदंभः एतादृशं हंसस्य विलासं विधाता ब्रह्मा नितरामत्यंतं कुपितश्चेत् विला
समेव हंति न तु दुग्धजलयोर्भेदविधौ या प्रसिद्धा वैदग्ध्यं चातुर्यं तस्य कीर्तिः तां ब्रह्मापि हर्तुं न स-
मर्थः तत्र इतरेषां का वार्ता १८ केयूरेति केयूराः बाहुभूषणानि चंद्रवदुज्ज्वलाः मुक्ताफलानां हा

नत्वस्य दुग्धजलभेदविधौ प्रसिद्धां वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः १८ केयू
रा न विभूषयंति पुरुषं हारा न चंद्रोज्ज्वला न स्नानं न विलेपनं न कुसुमं नालंकृ-
ता मूर्द्धजाः

राः शब्दं स्नानं विलेपनं गंधादिकं कुसुमं पुष्पं च अलंकृताः सज्जीकृ
ताः धूपिताः मूर्द्धजाः केशाः एते पदार्थाः पुरुषं न भूषयंति यदा मौर्ख्यं पुरुषस्य अस्ति तदा एभिः किं
भूषणं भवति नहि किं एका वाक् सम्यक् प्रकारेण अलंकरोति शोभयति सापि वाक् या संस्कृता पुरु

षेणधार्यतेसकलविभूषणानिक्षीयंतेएकंवाग्भूषणंनक्षीयते अतः सततंसार्वकालंवाग्भूषण
मेवभूषणम् १९ विद्येति पुरुषस्यविद्याव्यतिरिक्तंधनंतद्रूपंनभवति तत्क्षीयतेतस्करादिभि
र्नीयतेगोप्यंनभवति अतोविद्यानामधनंतत्समीचीनंबहुगुणं कथंभूतंविद्याख्यंधनं नरस्यअ

वाण्येकासमलंकरोतिपुरुषंयासंस्कृताधार्यतेक्षीयंतेखलुभूषणानिसततंवा
ग्भूषणंभूषणम् १९ विद्यानामनरस्यरूपमधिकंप्रच्छन्नगुप्तंधनंविद्याभोग
करीयशःसुखकरीविद्यागुरूणांगुरुः

धिकंरूपंकरोति तथाप्रच्छन्नंगुप्तं
धनंभवति विद्याभोगकरीभोगान्करोति यशः कीर्तिंसुखंकरोति विद्यागुरूणांगुरुः श्रेष्ठगुर
वः सर्वविद्यासंपूर्णंप्राज्ञंमपृष्ठुंआयांति समाज्ञः गुरूणामपिगुरुः अथचगृणातिहितमुपदिश

तीतिगुरुरितिगुरुपदव्याख्यानं अतोहितकर्त्रीविद्यैव विदेशगमने विद्याबंधुजनः विदेशेयेजना शा॰
स्तेविद्यया बंधुजनाएवभवंति विद्यापरंदैवतं राजसु पूजितायेषांविद्याते राज्ञांसभायांपूजिताभ १
वंति तथा धनाढ्याः पूजितानभवंति अतो विद्याहीनोयः सः पशुरेव २० क्षांतिरितिदेहिनां

विद्याबंधुजनोविदेशगमनेविद्यापरंदैवतंविद्याराजसुपूजितानहिधनंवि
द्याविहीनःपशुः २० क्षांतिश्चेद्वचनेनकिंकिमरिभिःक्रोधोस्तिचेद्देहिनांज्ञाति
श्चेदनलेनकिंयदिसुहृद्दिव्यौषधैः किंफलम्

प्राणिनांयदिक्षांतिः क्षमावर्ततेतन
दासांत्ववचनेन किंप्रयोजनम् तथाचक्रोधोस्तितर्हि अरिभिः शत्रुभिःकिं ज्ञातिश्चेदनलेनअ ९
ग्निनाकिं दायादाः सहजाश्च इतिवर्त्तंते ज्ञातयोयदाभिंदादिपुरुषंवदंतितेनैवदाहोभवतिअ

ग्नेः किंप्रयोजनम् यदिसकृत्सत्स्वगावर्तते तदादिव्यौषधैः किंफलंप्रयोजनं सकृत्सर्वा हितं
करोतियदि दुर्जनाः संतितदासर्पैः किं सर्पाः दंशविशेषेणमारयंति तथादुर्जनाअपिछिद्रान्वेष
णेनमारयंति यदिअनवद्यासुंदरासंपूर्णाविद्यास्तितदाधनैः किं यदिव्रीडालज्जाअसत्कर्मसु

किंसर्पैर्यदिदुर्जनाः किमुधनैर्विद्यानवद्यायदिव्रीडास्तेत्किमुभूषणैः सुकवितायद्य
स्तिराज्येनकिम् २१ दाक्षिण्यंस्वजनेदयापरजनेशाठ्यंसदादुर्जनेप्रीतिःसाधुजने
नयोनृपजनेविद्वज्जनेष्वार्जवम् शौर्यंशत्रुजनेक्षमागुरुजनेनारीजनेधूर्तताये चै
वंपुरुषाः कलासुकुशलास्तेष्वेवलोकस्थितिः २२ वर्ततेतदातदेवभूषणंइतरभूषणैः
किंयदिसुकवितांचातुर्यमस्तितदाराज्येनकिम् २१ दाक्षिण्यमौदार्यमितरार्थपदानिस्पष्टानि २२

भ॰नी॰ सत्संगतिः पुंसां किं न करोतीति कथय वदतात् किं धियः बुद्धेर्जाड्यम् मौर्ख्यं मंदतां हरति पापं दूरीक श॰
१० रोति चेतः प्रसादयति स्वच्छं करोति सर्वदिक्षु कीर्तिं तनोति विस्तारयति २३ २४ सूनुरिति १

जाड्यं धियो हरति सिंचति वाचि सत्यं मानोन्नतिं दिशति पापमपाकरोति चेतः प्रसाद
यति दिक्षु तनोति कीर्तिं सत्संगतिः कथय किं न करोति पुंसाम् २३ जयंति ते सु
कृतिनो रससिद्धाः कवीश्वराः नास्ति येषां यशःकाये जरामरणजं भयम् २४ सूनुः
सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः स्निग्धं मित्रमवंचकः परिजनो निःक्ले
शलेशं मनः

सूनुः पुत्रः सच्चरितः सद्वृत्तः सती प्रियतमा स्वामी प्रसादोन्मुखः स्निग्धं स्नेहयुक्त १०
मवंचकः परिजनः स्वकीयजनसमुदायः निःक्लेशं आधिरहितं स्वस्थं मनः आकारो रुचिरः स्थि

रम्यश्च विभवः सामर्थ्यं विद्यया अवदातं शोभितं मुखमिति एते पदार्था विष्टपरिहारिणि स्वर्गदायि
नी इष्टदहरौ नारायणे तुष्टे प्रसन्ने सति देहिना पुरुषेण प्राप्यते २५ प्राणाघातान्निवृत्तिः परधनहरणे
संयमः चित्तस्य नियमनं सत्यं वाक्यं यथाकाले शक्त्या दानं परेषां युवतिजनकथासु मूकभावः

आकारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखं तुष्टे विष्टपहारिणीष्टदहरौ संप्रा
प्यते देहिना २५ प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं काले शक्त्या
प्रदानं युवतिजनकथामूकभावः परेषाम् तृष्णास्रोतो विभंगो गुरुषु च विनयः
सर्वभूतानुकंपा सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पंथाः २६

तृष्णा लक्षणं स्रोत स्तस्य विभंगः आशाप्रवाहनिवर्तनं गुरुषु विनयः नम्रत्वं सर्वभूतेषु अनुकं

भ॰नी॰ पा कृपा एतेपदार्थाः सर्वशास्त्रेषुसामान्यतः बाहुल्येन अनुपहतविधिः नत्यक्तोविधिर्मर्यादा शा॰
११ एवंभूतः श्रेयसांपुण्यानांएषाः पंथामार्गःप्रोक्तः २६ नीचैः क्षुद्रैर्विघ्नभयेनयत्किंचित्कर्मनप्रा १
रभ्यतेन अनुष्ठीयते मध्यस्थाः आदौप्रारंभंकृत्वापश्चाद्विघ्नैर्विहता बाधिताः संतः कार्यंतथैव

प्रारभ्यतेनखलुविघ्नभयेननीचैःप्रारभ्याविघ्नविहताविरमंतिमध्याः वि
घ्नैःपुनःपुनरपिप्रतिहन्यमानाःप्रारभ्यचोत्तमजनानपरित्यजंति २७

परित्यजंतिउत्तमजनास्तुयदारब्धंकार्यंतस्मिन्पुनः पुनः विघ्नैर्नप्रतिहताअपिनपरित्यजं ११
ति २७ श्रीगोपालकृष्णोविजयते ६ ६ ६ ६

असंतोदुष्टानाभ्यर्थ्याः नयाचनीयाः कृशधनः अल्पधनः सुहृदपिनयाच्यः सर्वेषांप्रियान्या
य्याविध्युक्तावृत्तिः असुभंगेप्राणभंगेपिमलिनंपापमसुकरंनैवकरोति विपद्दिआपत्तौउच्चैः
स्थेयंमहत्पदेस्थितोभवतिस्वगौरवंनत्यजतिमहतांपदमनुविधेयंयथामहांतोस्वपदेस्वस्थाने

प्रियान्याय्यावृत्तिर्मलिनमसुभंगेप्यसुकरंत्वसंतोनाभ्यर्थ्याःसुहृदपिनयाच्यः
कृशधनः विपद्युच्चैःस्थेयंपदमनुविधेयंचमहतांसतांकेनोद्दिष्टंविषममसि
धाराव्रतमिदम् २८

महत्त्वेनास्थिताः तथैवअयमपि अनुकरोति इतिविषमंअसिधाराव्रतंनैष्ठिकव्रतंसतांकेनोपदि
ष्टंनकेनापिउपदिष्टंअयंसतांस्वाभाविकोगुणइत्यर्थः इतिविद्वत्प्रशंसा २८ ७ ७

अथमानशौर्यप्रशंसा क्षुत्क्षामोपिक्षुधयाक्षामःहीनसत्वोपिजरयाकृशोपिशिथिलप्रायोपिएवं 
कष्टादशांआपन्नःप्राप्तोपिविपन्नदीधितिरपिनिस्तेजोपिप्राणेषुनश्यत्स्वपिमरणसमयंप्राप्तोपिएवंजा 
नेसातिक्षुधानाशार्थंकेसरीसिंहः किंजीर्णंतृणमत्तिभक्षयति कथंभूतः केसरीमत्तश्चतेइभेंद्राश्चतेषां

क्षुत्क्षामोपिजराकृशोपिशिथिलप्रायोपिकष्टांदशामापन्नोपिविपन्नदीधितिर
पिप्राणेषुनश्यत्स्वपि मत्तेभेंद्रविभिन्नकुंभकवलग्रासैकबद्धस्पृहः किंजीर्णंतृणम
त्तिमानमहतामग्रेसरःकेसरी २९

विभिन्नाःविदारिताः कुंभाः गंडस्थलानितेषांयेमांस
कवलास्तेषांग्रासास्तेषुबद्धास्पृहायेनपुनः कथंभूतः मानेन अभिमानेन महांतः तेषांमध्ये अग्रेसरःअ 
ग्रगण्यः अहंकारयुक्तः एवंसिंहवत् अहंकारवान् पुरुषार्थीपुरुषोपिक्षुद्रकार्येनअवलंबते २९

स्वल्पमिति स्वल्पंस्नायुवसाद्यंतर्द्रतवस्तेषांअवशेषंअंशमात्रं तदपिमलिनंनिर्मांसंमांसरहितं एवंभूतमपिगोः वृषस्यअस्थिम्वालब्ध्वाप्राप्यसंतोषमेति परंतुतत्तस्यशुनः क्षुधाशांत्यर्थंनभवति सिंहस्तुजंबुकमंकंसमीपमागतमपित्यक्त्वाद्विपंहस्तिनमेवनिहंति एवंसर्वोजनः कृच्छ्रं कष्टंप्रा

स्वल्पंस्नायुवसावशेषमलिनंनिर्मांसमप्यस्थिगोः श्वालब्ध्वापरितोषमेतिनतु तत्तस्यक्षुधाशांतये सिंहोजंबुकमंकमागतमपित्यक्त्वानिहंतिद्विपंसर्वःकृच्छ्रं गतोपिवांछतिजनःसत्वानुरूपंफलम् २० लांगूलचालनमधश्चरणावपातं भूमौनिपत्यवदनोदरदर्शनंच सोपिसत्वानुरूपंसामर्थ्यानुरूपंफलंप्राप्नोति २०

श्वापिंडदस्यपिंडंग्रासंददातितस्यपुरतः लांगूलस्यपुच्छस्यचालनम् तथाचअधश्चरणाव

 पातंचरणानांपतनम् तथाचभूमौनिपत्यपतित्वावदनोदरयोर्दर्शनंदर्शयतिएवंकुरुतेगजपुंग 
 वः गजश्रेष्ठः हस्तीधीरंविलोकयति चाटुशतैः प्रियवचनशतैः प्रार्थितः सन् भुंक्ते एवंक्षुद्रज 

श्वापिंडदस्यकुरुतेगजपुंगवस्तुधीरंविलोकयतिचाटुशतैश्चभुंक्ते ३१ प
रिवर्त्तिनिसंसारेमृतःकोवानजायते सजातोयेनजातेनयातिवंशःसमुन्नति
म् ३२ कुसुमस्तबकस्येवद्वेगतीस्तोमनस्विनाम् मूर्ध्निवासर्वलोकस्यवि
शीर्यंतवनेथवा ३२ संत्यन्येपिबृहस्पतिप्रभृतयःसंभाविताःपंचशस्तान्प्र
त्येषविशेषविक्रमरुचीराहुर्नवैरायते

नः मानहीनस्थलेअवमानतोपिपुनःपुनः 
याचयत्येव धीरः प्रार्थितोपिनैवआयातिमानपुरःसरंगृह्णातीत्यर्थः ३१ ३२ ३२ बृहस्पतिप्र

भूतयः पंचशः संभाविताः महांतः संति तान्प्रति एष राहुः विशेषविक्रमरुचिः सन्नवैरायते नवैरंकरोति पर्वणि दिनेश्वरः सूर्यः निशाप्राणेश्वरश्चंद्रः इमौ द्वावेव भास्वरौ तेजस्करावपि ग्रसते कथंभूतोराहुः दानवपतिः शीर्षावशेषीकृतः अतोभ्रांतः एवंकिमुक्तं वैरिण्यवशेषम्

द्वावेवग्रसते दिनेश्वरनिशाप्राणेश्वरौ भास्वरौ भ्रांतंपर्वणि पश्यदानवपतिः शीर्षावशेषीकृतः ३४ वहतिभुवनश्रेणींशेषः फणाफणकास्थितां कमठपतिनामध्येपृष्ठं सदासविधार्यते तमपिकुरुते क्रोडाधीनंपयोधिरनादरात् अहहमहतांनिःसीमानश्चरित्रविभूतयः ३५

नस्थेयांचिः शेषः कर्त्तव्यः ३४ शेषः भुवनश्रेणीं फणाफणकास्थितां फणामंडलास्थितां वहतिसशेषः कमठपतिना कूर्मेणपृष्ठमध्ये सदाधार्य

ते तं कूर्मं पयोनिधिः समुद्रः अनादरात् क्रोडोवराहस्तदधीनंकुरुते एवंमहतांचरित्राविभूतयः
निःसीमानःमर्यादां अतिक्रांता अतिशायिता अनेनमहतांसामर्थ्यंनिःसीमम्परिमितमितिसूचि
तं २५ तुषाराद्रेः हिमालयस्य सूनोः पुत्रस्य समद मघवन् मुक्तकुलिशप्रहारैर्मदेनयुक्तोमघवान् इंद्र

वरं पक्षच्छेदः समदमघवन्मुक्तकुलिशप्रहारैरुद्गच्छद्बहलदहनोद्गारगुरुभिः तुषा
राद्रेः सूनोरहह पितरि क्लेशविवशेनचासौसंपातःपयसिपयसांपत्युरुचितः २६

स्तेन मुक्तकुलिशप्रहारास्तैः पक्षच्छेदः वरंश्रेष्ठः कथंभूतैः उद्गच्छंतः बहलदहनस्यउद्गारास्तैर्गुरु
भिः पृथुभिः एवंभूतैः खड्गप्रहारैः कस्मिन्सतिपितरि हिमाद्रौक्लेशविवशेपक्षच्छेदेनक्लेशयुक्तेस
तिंतंपितरंत्यक्त्वापयसांपत्युः समुद्रस्यपयासिउदकेसंपातः भयेनपतनमुचितंन २६ ६

यद्चेतनोपिसूर्यकांतः सवितुः सूर्यस्यपादैः किरणैः स्पृष्टः सन्प्रज्वलति एवंसविसचेतनोतेज-
स्वीपुरुषः परकृतविकृतिंविकारंकथंसहतेन सहेतेत्यर्थः १७ सिंहेति शिशुरपि सिंहः मदेन

यदचेतनोपिपादैः स्पृष्टःप्रज्वलतिसवितुरिनकांतः तत्तेजस्वीपुरुषःपरकृ
ताविकृतिंकथंसहते १७ सिंहःशिशुरपिनिपततिमदमलिनकपोलभि
त्तिषुगजेषु प्रकृतिरियंसत्ववतांनखलुवयस्तेजसोहेतुः १८

मलिनाः कपोलभित्तयोयेषांतेषुगजेषुनिपतति इयंसत्ववतांप्रकृतिः स्वभावः अतः खलुनि
श्चयेनतेजसांहेतुःनवयः १८.

इतिमानशौर्यप्रशंसासमाप्ता

जातिः स्वजातिः रसातलं यातु गच्छतु गुणाः सद्गुणास्तेषां गणः समुदायः रसातलस्यापि अ
धः गच्छताम् शीलं सद्वृत्तं शैलतटात् पर्वततटात्पततु अभिजनः स्वजनः वह्निना दह्यतां शौ

जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतां शीलं शैलतटात्पतत्वभि
जनः संदह्यतां वह्निना शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोस्तु नः केवलं ये
नैकेन विना गुणास्तृणलवप्रायाः समस्ताइमे ३९

र्येणयान्तितुं न शक्यते
अतस्तद्वैरी शौर्येनास्मिन् वज्रं आशु शीघ्रं निपततु एवं सर्वस्य हानिर्भवतु परंतु नः अस्माकं केवलं
मुख्यः अर्थः द्रव्यं अस्तु किमर्थं येनकेन अर्थेन विना पूर्वोक्तगुणास्तृणलवप्राया भवंति ३९ छ

सामर्थ्यें सातियानि पूर्वं इंद्रियाणि तान्येव संति तदेव कर्म बुद्धिरपि साएव कीदृशी अप्रतिहता
नाशं न प्राप्ता वचनमपि तदेव वक्रुशक्तिः एवं सर्वथाऽपूर्वमस्ति परंतु एकः अर्थः द्रव्यं तस्यऊ

तानींद्रियाणि सकलानि तदेव कर्म साबुद्धिरप्रतिहता वचनं तदेव अर्थोष्म
णाविरहितः पुरुषः सएव त्वन्य क्षणेन भवतीति विचित्रमेतत् ४० यस्या
ऽस्ति वित्तं सनरः कुलीनः सपंडितः स श्रुतवान् गुणज्ञः सएव वक्ता सच द-
र्शनीयः सर्वेगुणाः कांचनमाश्रयंति ४१ ७ ७

ष्मा तेन विरहितः शून्यः सएव पुरुषः अन्यक्षणेन भवतीति विचित्रमाश्चर्यम् ४० ४१

दौर्मंत्र्यान्नृपतिर्विनश्यतियतिःसंगात्सुतोलालनाद्विप्रोनध्ययनात्कुलंकु
तनयाच्छीलंखलोपासनात् ह्रीर्मद्यादनवेक्षणादपिकृषिःस्नेहःप्र
वासाश्रयात् मैत्रीचाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ४२ दा
नंभोगोनाशस्तिस्रोगतयोभवंतिवित्तस्य योनददातिनभुंक्तेतस्यतृती
यागतिर्भवति ४३ मणिःशाणोल्लीढःसमरविजयीहेतिनिहतोमदक्षी
णोनागःशरदिसरितःश्यामपुलिनाः कलाशेषश्चंद्रःसुरतमृदिताबा
लललनाननिम्नाशोभंतेगलितविभवाश्चार्थिषुजनाः ४४ ६ ६ १६

४२ ४३ ४४ ६ ६ ६ ६ ६ ६

परिक्षीणोतिकश्चित्पुरुषः क्षीणः सन् यवानां प्रसृतये तुषाय स्पृहयति स्पृहां करोति सए
व पश्चाद्ग्रे लक्ष्म्या संपूर्णः सन् इमां धरित्रीं तृणसमां गणयति अतः धनिनां अनैकांत्याद्वैक्र
स्थितेरभावादवस्था अर्थेषु प्रयोजनेषु गुरुलघुतया वस्तूनि प्रथयति संकोचयति चापदाकाले

परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये स पश्चात्संपूर्णो कलयति ध
रित्रीं तृणसमाम् अतश्चानैकांत्याद्गुरुलघुतयार्थेषु धनिनामवस्था व-
स्तूनि प्रथयति च संकोचयति च ४५ ॥ ॥

न अवस्थायाः गुरुत्वं भवति तदा गुरुत्वमेवेच्छति यदा लघुत्वमेवांगीकरोति तदा कालपर
त्वेन अवस्थाभेदो भवति ४५ श्रीकृष्णायनमः ॥ ॥

हे राजन् यद्येनांक्षितिधेनुंदुधुक्षसिदोग्धुमिच्छसितेनकारणेन अद्यअधुनाइमंप्रजालोकं वत्समिवपुषाणपोषयेति तास्मिन्नृलोकवत्सेसम्यक्परिपोष्यमाणेसतितदाइयंभूमिःकल्पलतेवअनिशंसार्वकालंनानाफलैःफलतिफलंदास्यति ४६ कुत्रचिदव्ययंसर्वेनवक्तव्यं

राजन्दुधुक्षसियदिक्षितिधेनुमेनांतेनाद्यवत्समिवलोकममुंपुषाण त
।स्मिंश्चसम्यगनिशंपरिपोष्यमाणेनानाफलैःफलतिकल्पलतेवभूमिः ४६

सत्यानृताचपरुषाप्रियवादिनीचहिंस्रादयालुरपिचार्थपरावदान्या

कुत्रचित्सत्यासत्यत्वेन अनृताअनृतत्वेन परुषाकाठिन्येन मृदुवादिनीमधुरभाषणेन हिंस्राहिंसया दयालुःकृपालुत्वेन अर्थपराअर्थग्रहणेन वदान्यादातृत्वेन नित्यव्यया

यस्ययन्नियमितंतेनतत्दैवमप्रचुरं नित्यधनानामागमनंतेन एवंनृपतेः राज्ञः नीतिः कर्त्तव्य
ताअनेकरूपायथावारांगनावेश्यानानावेषान्‌करोतितथानीतिरपिनानारूपाभवति ४७
४८ धात्राब्रह्मणायत्‌निजेस्वकीयेभालपट्टेस्तोकमल्पंमहत्‌बहुधनंलिखितंनदेवपुरु

नित्यव्ययाप्रचुरनित्यधनागमाच वेश्यांगनेवनृपनीतिरनेकरूपा ४७
आज्ञाकीर्तिःपालनंब्राह्मणानांदानंभोगोमित्रसंरक्षणंच येषामेतेषट्‌
गुणानप्रवृत्ताः कोर्थस्तेषांपार्थिवोपाश्रयेण ४८ यद्धात्रानिजभालपट्टलि
खितंस्तोकंमहद्वाधनंतत्प्राप्नोतिमरुस्थलेपिनितरांमेरौततोनाधिकम्‌

षः मरुस्थलेनिर्जलदेशेमेरौचसुवर्णाद्रौनितरांनिश्चयेनप्राप्नोति अतस्त्वंधीरोभववित्त

वत्सद्रव्याद्येषुकृपणादीनांवृत्तिंवर्तनंजीवनंवावृथामाकृथामाकुरु अत्रदृष्टांतंपश्य



तद्धीरोभववित्तवत्सुकृपणांवृत्तिंवृथामाकृथाः कूपेपश्यपयोनिधावपि
घटोगृह्णातितुल्यंजलम् ४९ त्वमेवचातकाधारोसीतिकेषांनगोचरः
किमंभोदवरास्माकंकार्पण्योक्तिःप्रतीक्ष्यसे ५० रेरेचातकसावधानमन
सामित्रक्षणंश्रूयतामंभोदाबहवोहिसंतिगगनेसर्वेऽपिनैतादृशाःकेचिद्वृ
ष्टिभिरार्द्रयंतिवसुधांगर्जंतिकेचिद्वृथायंयंपश्यसितस्यतस्यपुरतोमाब्रू-
हिदीनंवचः ५१

कूपे अथवा पयोनिधौ समुद्रे घटः तुल्यं यावत्प्रमाणं जलं गृ- १८

ह्णाति ४९ ५० ५१ छ छ छ छ

५२ ५२ जाड्यमिति गुणिनां गुणः यः दुर्जनैर्न अंकितः सकोनाम भवेत् नास्त्येव तत्
कथम ह्रीमति लज्जावति पुरुषे जाड्यं मौर्ख्यं स्थापयंति व्रतरुचौ सत्पुव्रत धारणे दंभः गण्य

अथ दुर्जनप्रशंसा अकरुणत्वमकारणविग्रहः परधने परयोषिति चस्पृहा स्वजनबंधुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ५२ दुर्जनः परिहर्तव्यो विद्यया भूषितोपि सन् मणिनालंकृतः सर्पः किमसौन भयंकरः
५३ जाड्यं ह्रीमति गण्यते व्रतरुचौ दंभः शुचौ कैतवं शूरे निर्घृणता मुनौ वि
मतिता दैन्यं प्रियालापिनि

ते शुचौ शुचिष्मत्तायां कैतवं प्रतारणम् शूरे नि
र्घृणता निर्दयत्वम् मुनौ मौने विमतिता प्रज्ञाराहित्यं वक्तुं न जानाति प्रियालापिनि प्रिया व

क्रूरे दैन्यं दारिद्यं तेजस्विन्यवलिप्तता वक्तरि मुखरता वाचालता स्थिरे पुरुषे अशक्तिः एवं स

तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे तत्को नाम गुणो भवेत्स गुणिनां
यो दुर्जनैर्नांकितः ५४ लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः सत्यं चे
त्तपसा च किं शुचिमनो यद्यस्ति तीर्थेन किम् सौजन्यं यदि किं गुणैः सुमहिमा यद्य
स्ति किं मंडनैः सद्विद्या यदि किं जनैः परयशो यद्यस्ति किं मृत्युना ५५ शशी दिवस
धूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः प्रभुर्धनप
रायणः सततदुर्गतः सज्जनो नृपांगणगतः खलो मनसि सप्त शल्यानि मे ५६

र्वेष्वपि गुणेषु दोषारोपो दुर्जनैः क्रियते एवं दुर्जनैर्नांकितः न निंदितः इत्थं गुणो नास्ति ५४ ५५ ५६

चंडकोपानां पुत्राणां भूभृजां राज्ञां कश्चिदात्मीयः प्रियः अर्हो न भवति यथा पावको अग्निहोतारं होमकर्त्तारमपि जुह्वानं होमसमयेपि स्पृष्टः सन् दहति ५७ यदा सेवकेन मौनं धृतं तदा मूकः अवच

नकश्चिच्चंडकोपानामात्मीयो नाम भूभुजाम् होतारमपि जुह्वानं स्पृष्टो दहति पावकः ५७ मौनान्मूकः प्रवचनपटुश्चाटुलो जल्पको वा धृष्टः पार्श्वे वसति न च तदा दूरतश्चाप्रगल्भः क्षांत्या भीरुर्यदि न सहते प्रायशो नाभिजातः सेवाधर्मः परमगहनो योगिनामप्यगम्यः ५८

न च हुश्चेत् चाटुलः वाचालः अथ वा जल्पकः यत्किं चिद्वदति पार्श्वे स्थितः सन् धृष्टः दूरतो भवति तदा अप्रगल्भः क्षांतिः क्षमा धृता चेद्भीरुः भयभीतः यदि न सहते तदा नाभिजातः मूर्खः अप्रयोजकः एवं प्रायशः सेवाधर्मः परमगहनः कठिनः योगिनामपि अगम्यः कर्तुमशक्यः ५८

भ॰नी॰ नीचस्य क्षुद्रजनस्य गोचरगतैः समीपवर्तिभिः पुरुषैः कैः सुखमास्यतें उपविश्यते कथंभूतस्य नीचस्य श॰

२० उद्भासिताखिलखलस्य उद्भासिताः प्रगटीकृताः अखिलाः समस्ताः खला येन खलत्वं प्रगटीकृतं पुनः प्रा १

क् पूर्वं जाता इदानीं विस्तृता निजा स्वकीया अधमकर्मणां वृत्तिर्येन एवं सति दैवात् अदृष्टवशात् प्राप्तः वि

उद्भासिताखिलखलस्य विशृंखलस्य प्राग्जातविस्तृतनिजाधमकर्मवृत्तेः दैवादवाप्तविभवस्य गुणद्विषोस्य नीचस्य गोचरगतैः सुखमास्यते कैः ५९ आरंभगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् दिनस्य पूर्वार्द्धपरार्द्धभिन्ना छायेव मैत्री खलसज्जनानाम् ६०

भवो येन पुनः कथं गुणान् सद्गुणान् द्विषतीति गुणद्विट् तस्य गुणद्विषः एवंभूत २०

गुणस्य प्राप्तवैभवस्य समीपे कैरपि सुखेन नैव उपविशितुं शक्यते अथ खलस्क संभाव्यते ५९ ६०

मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम् लुब्धकधीवरपि
शुनानिष्कारणवैरिणोजगति ६१ इतिदुर्जनप्रशंसा अथसज्जनप्र
शंसा वांछासज्जनसंगमे परगुणेप्रीतिर्गुरौ नम्रता विद्यायांव्यसनं
स्वयोषितिरतिर्लोकापवादाद्भयम् भक्तिःशूलिनिशक्तिरात्मदमनेसं
सर्गमुक्तिःखलेष्वेतेयेषुवसंतिनिर्मलगुणास्तेभ्योनरेभ्योनमः ६२ विप
दिधैर्यमथाभ्युदयेक्षमासदसिवाक्पटुतायुधिविक्रमः यशसिचाभि
रतिर्व्यसनंश्रुतौप्रकृतिसिद्धमिदंहिमहात्मनाम् ६३

६१ ६२ ६३ [illegible] [illegible] [illegible] [illegible] [illegible] [illegible] [illegible]

प्रदानमितिप्रदानंप्रकर्षेणयद्दत्तंतत् छन्नमाच्छादितंगृहमुपागतस्यसंभ्रमविधिः आदरविधिः 
प्रियंकृत्वामौने एकस्यप्रियंकृतंतन्नवदतिसदसि सभायामुपकृते एकस्यउपकारःकृतःतस्यकथनं 

प्रदानंप्रच्छन्नंगृहमुपगतेसंभ्रमविधिःप्रियंकृत्वामौनंसदसिकथनंचाप्युपकृतेः
अनुत्सेकोलक्ष्म्यांनिरभिभवसाराःपरकथाःसतांकेनोद्दिष्टंविषममसिधाराव्रत
मिदम् ६४ करेश्लाघ्यस्त्यागःशिरसिगुरुपादप्रणयितामुखेसत्यावाणीविज-
यिभुजयोर्वीर्यमतुलम् हृदिस्वस्थावृत्तिःश्रुतमधिगतैकव्रतफलंविनाप्यैश्वर्ये
णप्रकृतिमहतांमंडनमिदं ६५

नकरोतिलक्ष्म्यांसत्यामनुत्सेकः अगर्वःपरस्यसत्कथाभवसाराः 
परमार्थरूपाःनिरवधिकर्तव्याः इदंव्रतमसिधारावत्काठिनंसतांकेनोपदिष्टंनकेनापिअयंसतांस्वाभाविको-
गुणः६४ ६५

६६ संतप्तेति एकमेवजलं तत्संसर्गतः अनेकगुणं भवति तद्यथा संतप्तायसि संतप्ते लोहे स्थि
तं चेत्पयसो नामापि न ज्ञायते अभाव एव तदेव जलं नलिनीपत्रे स्थितं मुक्ताकारतया राजते तदेव

संपत्सु महतां चित्तं भवत्युत्पलकोमलम् आपत्सु च महाशैलशिलासंघातकर्कशम् ६६ संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते प्रायेणाधममध्यमोत्तमगुणाः संवासतो देहिनाम् ६७

जलं स्वातीमहानक्षत्रे मेघात्सागरे पतितम् तदापि शुक्तिकामध्यगतं चेत् मुक्ताफलं जायते एवं प्रायेण प्रायशः पुरुषस्य उत्तममध्यमाधमगुणाः संसर्गतो जायंते ६७ ६७ ६७

भ॰नी॰ ६८ नम्रत्वेनोन्नमंतःउच्चामान्याभवंति स्वान्स्वकीयान्गुणान्परेषांगुणानांकथनैःस श॰

२२ हख्यापयंतः कथयंतःस्वान्गुणान्स्वयंनवदंति परेषांगुणानुवादाः क्रियंतेतैरेवप्रसंगे १

यःप्रीणयेत्सुचरितैःपितरंसपुत्रोयद्भर्तुरेवहितमिच्छतितत्कलत्र
म् तन्मित्रमापदिसुखेचसमक्रियंयदेतत्त्रयंजगतिपुण्यकृतो
लभंते ६८ नम्रत्वेनोन्नमंतःपरगुणकथनैःस्वान्गुणान्ख्यापयं
तःस्वार्थान्संपादयंतोविततपृथुमहारंभयत्नाःपरार्थे

नएतेषांगुणानुवर्णनंक्रियतेइतिकृत्वास्वार्थान्संपादयंतःपरस्यार्थेविततविस्तृताःपृथवः २२
महांतआरंभाः कर्माणियेषांतान्दुर्जनान्क्षांत्यैवक्षमयाएवंदूषयंतः एवंसंतः आश्चर्येण

सहवर्याः श्रेष्ठाः जगतिबहुमतामान्याः कस्यनअभ्यर्चनीयाः पूज्यानभवंति एवंभूताः

क्षांत्यैवाक्षेपरुक्षाक्षरमुखरमुखान्दुर्जनान्दूषयंतः संतः साश्चर्यचर्याजगतिबहुमताः कस्यनाभ्यर्चनीयाः ६९ इतिसुजनप्रशंसा भवंतिनम्रास्तरवः फलोद्गमैर्नवांबुभिर्भूरिविलंबिनोघनाः अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभावएवैषपरोपकारिणाम् ७० श्रोत्रंश्रुतेनैवनकुंडलेनदानेन पाणिर्नतुकंकणेन विभातिकायः करुणापराणांपरोपकारैर्नतुचंदनेन७१

संतः पूज्याः ६९ ७० ७१ श्रीमत्दत्तात्रेयमहाराजायनमः ६ ६

७२ पद्माकरेति पद्माकरं सूर्यविकाशिकमलानां समुदायं दिनकरो विकचं विकासितं क
रोति तथैव चंद्रः रात्रिविकासिकैरवचक्रवालं पद्मसमुदायं विकासितं करोति एवं ज

पापान्निवारयति योजयते हिताय गुह्यं च गूहति गुणान् प्रकटीकरोति आ
पद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदंति संतः ७२
पद्माकरं दिनकरो विकचीकरोति चंद्रो विकाशयति कैरवचक्रवालम् नाभ्य
र्थितो जलधरोपि जलं ददाति संतः स्वयं परहिताभिहिताभियोगाः ७३

लधरो मेघः न प्रार्थितः सन् जलं ददाति किमर्थं कुर्वंति लर्हि संतः स्वयं परहिते स्वकृताभियो
गाः अप्रार्थिताः संतः स्वयं परहितं कुर्वंति तेषां स्वभावः ७३ ६ ६

स्वार्थं परित्यज्य परार्थघटकाः परकार्यं कुर्वंति ते सत्पुरुषाः स्वार्थस्याविरोधेन आदौ स्वका
र्यं कृत्वा पश्चात् परकार्यं कुर्वंति ते सामान्याः मध्यमाः ये स्वार्थाय परहितं निघ्नंति ते अमी मानु

एके सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये सामान्यास्तु परार्थ
मुद्यमभृतः स्वार्थाविरोधेन ये तेमी मानुषराक्षसाः परहितं स्वार्था
य निघ्नंति ये ये निघ्नंति निरर्थकं परहितं ते के न जानीमहे ७४

षेषु राक्षसाः कनिष्ठाः तु पुनः इति निश्चयेन ये निरर्थकं परहितं निघ्नंति ते केन जानीमहे
तेषां लक्षणं न ज्ञायते ७४ ६ ६ ६

पुरापूर्वंक्षीरेण दुग्धेन आत्मगताय उदकाय अखिलाः सर्वेगुणाः हिनिश्चयेन दत्ताः अतः उभयोर्मैत्रीजाता तदनंतरं तेन पयसा उदके क्षीरे दुग्धे तापम वेक्ष्य दृष्ट्वा आत्मा स्वदेहः कृशानौ हुतः दुग्धेन क्षेअंतर्गतं जलं ज्वलतितदनंतरं स्वमित्रेण जलेन मदर्थं आत्मा कृशानौ हुतः

क्षीरेणात्मगतोदकाय हिगुणा दत्ताः पुरा ते खिलाः क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः गंतुं पावकमुन्मनास्तदभवत् दृष्ट्वा तु मित्रापदं युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ७५

तर्हि अहमपि पतिष्या

मीति दुग्धं मित्रापदं दृष्ट्वा तत्क्षीरं पावकं गंतुं उन्मनाः उत्कंठितमभवत् पुनरपि तत् क्षीरं जले २४

न प्रोक्षितं तच्छाम्यति एतद्युक्तमुचितं अतः सतां मैत्रीगुणास्तादृशा एव ७५ ६

अहोइत्याश्चर्यें सिंधोः समुद्रस्यवपुः विततं विस्तृतमूर्जितं महद्भारं सहते तत्कथम्
इतः एकतः केशवः स्वपिति निद्रांकरोति इतः एकतः तदीयद्विषां केशववैरिणां असुराणां कुलं

इतः स्वपिति केशवः कुलमितस्तदीयद्विषामितश्चशरणार्थिनः शिखरिणांगणा.
शेरते इतोपिवडवानलः सहसमस्तसंवर्त्तकैरहोविततमूर्जितंभरसहंचसि
धोर्वपुः ७६ तृष्णांछिंधिभजक्षमांजहिमदंपापेरतिंमाकृथाः सत्यंब्रूह्यनुयाहि
साधुपदवींसेवस्वविद्वज्जनं मान्यान्मानयविद्विषोप्यनुनयप्रख्यापयस्वान्गु
णान्कीर्त्तिंपालयदुःखितेकुरुदयामेतत्सतांलक्षणं ७७ शेतेएकतःशरणागताःशिख
रिणःपर्वताःपक्षिणश्चशेरते एकतःसमस्तसंवर्त्तकैःसहवडवानलःशेतेएवंविलक्षणरूपंभरस्यभारसहं
वपुरितिआश्चर्यं १६७६

भ·नि· ७८ किंतेनेति किंतेन हेमगिरिणा मेरुणा रजताद्रिणा हिमालयेन वा अस्य आश्रिता स्तरवः श·

२५ तरव एव भवंति नतु आत्मसदृशाः स्ववर्णरौप्यरूपाः कृता अतस्तैः किं प्रयोजनमुतस्मान्मलया १

मनसि वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः प्रीणयं
तः परगुणपरमाणून्पर्वतीकृत्य नित्यं निजहृदि विकसंतः संति संतः कि
यंतः ७८ किंतेन हेमगिरिणा रजताद्रिणा वा यत्राश्रिताश्च तरवस्तरवस्त
एव मन्यामहे मलयमेव यदाश्रयेण कंकोलनिंबकुटजा अपि चंदनाः स्युः
७९

किं बहु मन्यमानं मन्यामहे अस्य आश्रिताः कंकोलनिंबकुटजा वृक्षाः अपि चंद २५

नाः स्युः चंदना एव भवंति इति परोपकारः ७९ ६ ६ ६

अथधैर्यप्रशंसा रत्नैर्महार्हैस्तुतुषुर्नदेवानभेजिरेभीमविषेणभीतिम्
सुधांविनानप्रययुर्विरामंननिश्चितार्थाद्विरमंतिधीराः ८० क्वचिद्भूमौशय्या
क्वचिदपिचपर्यंकशयनंक्वचिच्छाकाहारः क्वचिदपिचशाल्योदनरुचिः क
चित्कंथाधारीक्वचिदपिचदिव्यांबरधरोमनस्वीकार्यार्थीनगणयतिदुःखंन
चसुखम् ८१ ऐश्वर्यस्यविभूषणंसुजनताशौर्यस्यवाक्संयमोज्ञानस्यो
पशमःश्रुतस्यविनयोवित्तस्यपात्रेव्ययः अक्रोधस्तपसःक्षमाप्रभवितु
र्धर्मस्यनिर्व्याजतासर्वेषामपिसर्वकारणमिदंशीलंपरंभूषणम् ८२

८० ८१ ८२ ५ ५ ५ ५ ५

८३ भग्नाशेति कश्चित्सर्पः गारुडिनाधृतः करंडमध्ये निक्षिप्तः तस्य स्थितिं वदति कथं
भूतस्य सर्पस्य भग्नाशस्य अहमस्मान्न मोक्षयिष्ये इति आशा भग्ना यस्य पुनः करंडपीडित
तनोः पुनः क्षुधया म्लानेंद्रियस्य एवंजाते सति दैववशात्केनचित् आखुना नक्तमागत्य तत्करं

निंदंतु नीतिनिपुणा यदि वा स्तुवंतु लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्
अद्यैव वा मरणमस्तु युगांतरे वा न्याय्यात्पथः प्रविचलंति पदं न धीराः ८३ भ
ग्नाशस्य करंडपीडिततनोर्म्लानेंद्रियस्य क्षुधा कृत्वाखुर्विवरं स्वयं निप
तितो नक्तं मुखे भोगिनः

डस्य विवरं छिद्रं कृत्वा नक्तं रात्रौ अंतः प्रविष्टः सन् भोगि २६
नो मुखे पतितः पश्चात्तस्य आखोः पिशितेन स सर्पः तृप्तः तेनैव छिद्रमार्गेण बहिर्यातः अतः

भोजनाः यूयंस्वस्थास्तिष्ठतदैवमदृष्टमेवनृणांवृद्धौक्षयेन्न कारणमस्तिउद्योगंत्यजंतु अद्य

तृप्तस्तास्मिशितेनसत्वरमसौतेनैवयातःपथालोकाःपश्यतदैवमेवहिनृणां वृद्धौक्षयेकारणम् ८४ पातितोपिकराघातैरुत्पतत्येवकंदुकः प्रायेण साधुवृत्तानामस्थायिन्योविपत्तयः ८५ आलस्यंहिमनुष्याणांशरीर-स्थोमहान्रिपुः नास्त्युद्यमसमोबंधुःकुर्वाणोनावसीदति ८६ छिन्नो पिरोहितितरुःक्षीणोप्युपचीयतेलोके इतिविमृशंतःसंतःसंतप्यंतेन-विप्लुतालोके ८७ इतिधैर्यप्रशंसासमाप्ता

स्ववशात् यद्भविष्यति तद्भविष्यति ८४ ८५ ८६ ८७ ७ ७ ७

अथदैवप्रशंसा नेतायस्यबृहस्पतिःप्रहरणंवज्रंसुराःसैनिकाःस्वर्गो
दुर्गमनुग्रहःकिलहरेरैरावतोवारणः इत्यैश्वर्यबलान्वितोपिबलभिद्भ
ग्नःपरैःसंगरेतद्व्यक्तंवरमेवदैवशरणंधिक्धिग्वृथापौरुषम् ८८ क
र्मायत्तंफलंपुंसांबुद्धिःकर्मानुसारिणी तथापिसुधियाभाव्यंसुविचा
र्यैवकुर्वता ८९ खल्वाटोदिवसेश्वरस्यकिरणैःसंतापितोमस्तके वांछन्
देशमनातपंविधिवशात्तालस्यमूलंगतः तत्राप्यस्यमहाफलेनपत-
ताभग्नंसशब्दंशिरः प्रायोगच्छतियत्रभाग्यरहितस्तत्रैवयांत्यापदः

९० ७ ७ ७



८८ ८९ ९० ७ ७ ७ ७ ७ ७ ७

९१ सृजतीति ब्रह्मातावत्प्रथममशेषगुणाकरं सर्वगुणानामुत्पत्तिस्थलंभुवः अलंकरणमलं

शशिदिवाकरयोर्ग्रहपीडनंगजभुजंगमयोरपिबंधनम् मतिमतांचविलोक्य
दरिद्रतांविधिरहोबलवानितिमेमतिः ९१ सृजतितावदशेषगुणाकरंपुरुषर
त्नमलंकरणंभुवः तदपितत्क्षणभंगिकरोतिचेदहहकष्टमपंडिततावि धेः
९२ पत्रंनैवयदाकरीरविटपेदोषोवसंतस्यकिंनोलूकोप्यवलोकतेयदिदिवा
सूर्यस्यकिंदूषणम् धारानैवपतंतिचातकमुखेमेघस्यकिंदूषणंयत्पूर्वंविधि
नाललाटलिखितंतन्मार्जितुंकःक्षमः ९२ इतिदैवप्रशंसासमाप्ता कारणवाह

शंपुरुषरत्नंसृजतितदपिपुरुषरत्नंक्षणभंगिकरोतिचेत् अहहइतिखेदेकष्टंयथास्यात्तथाइयंविधे
ब्रह्मणअपंडितताअज्ञानं ९२. ९२

याप्तेति यासाल्क्रियाखलानपिसाधून्करोति मूर्खान् विदुषः करोति द्वेषिणो हितान्करोति शः
हालाहलं अमृतं परोक्षं प्रत्यक्षं करोति तां सत्क्रियां भगवती माराधय यदि वांछितं फलं भोक्तु- १
मिच्छसि हे साधो विपुलेषु गुणेषु व्यसनैः प्रीतिभिः आस्थां वृथा मा कृथाः सत्क्रियां विनाकेव

यासाधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः प्रत्यक्षं कुरुते परोक्षममृ
तं हालाहलं तत्क्षणात् तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वांछितं हे साधो
व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ९८ लैर्गुणैर्न किंचित्फलं अथवा विपरीतं अ

स्मिन् मोहाब्धौ गुणेषु आस्थां वृथा मा कृथा मा कुरु सत्क्रियां भगवतीं आराधय सत्क्रियां विना अस्मिन् यु २९
गे फलं न भवति कथंभूतां सत्क्रियां या साधून् खलान् विदुषो मूर्खान् हितान्द्वेषिणः अमृतं हालाहलं कुरुते
९८

गुणेति गुणवत् गुणैर्युतं अथवा गुणवत्कार्यं कुर्वता कर्त्तुमिच्छता पंडितेन विवेकिना आदौ पूर्व मेव यत्नतः प्रयत्नात् तस्य कार्यस्य अकार्यस्य परिणतिः प्रांतः अवधार्या विचारणीया कर्त्तुं शक्यं शाक्या शक्यं इति आदौ विचार कर्त्तव्यं अन्यथा अतिरभसेन सहसा कृतानां कर्मणां विपाकः

गुणवदगुणवद्वा कुर्वता कार्यमादौ परिणतिरवधार्या यत्नतः पंडितेन
अतिरभसकृतानां कर्मणामाविपत्तेर्भवति हृदयदाही शल्यतुल्यो विपा
कः ९९ स्थाल्यां वैडूर्यमय्यां पचति तिलशकलं चंदनैरिंधनाद्यैः सौवर्णैर्लांगला
ग्रैर्विलिखति वसुधां कर्म तूलस्य हेतोः प्रांतः फलं आविपत्तेः मरणपर्यंतं हृदयदा
हीशल्यतुल्यो भवति ९९ मनुजो मनुष्या इमां कर्मभूमिं प्राप्य यस्तपः स्वधर्मं निःशंसाक्रियां न

चरतिसमंदभाग्यः स्वाहितंनजानाति अत्रदृष्टांतः यथावैडूर्यमय्यांरत्नखचितायांसुवर्णस्थाल्यांलशुनंचंदनकाष्ठैः पचतिपाकंकरोतियथासुवर्णमयैः लांगलाग्रैः हलाग्रैः वसुधांपृथ्वींविलखातिभूमिंशुद्धांकरोतिकिमर्थंअर्कतूलस्यहेतोः अर्कवृक्षाणांरोपणार्थंकर्पूरखंडान्



छित्वाकर्पूरखंडान्वृतिमिहकुरुतेकोद्रवाणांसमंतात्प्राप्येमांकर्म
भूमिंनचरतिमनुजोयस्तपोमंदभाग्यः १००

कर्पूरवृक्षान् छित्वातत्रसमंतान् कोद्रवाणांवृत्तिंरोपणंकुरुते तथाइमांभूमिंप्राप्यतपस्त्यक्त्वाविषयभोगान् भुंक्ते १०० ३०

छ छ छ छ

अंभसिमज्जतु मेरुशिखरंयातु आहवे युद्धे शत्रून्जयतु वाणिज्यकृषिसेवनादिसकला
विद्याः कलाश्च शिक्षतु अभ्यासंकरोतु विपुलं पुष्कलं आकाशंयातु गच्छतु खगवत्पक्षिवत्

मज्जत्वंभसियातु मेरुशिखरं शत्रून्जयत्वाहवे वाणिज्यं कृषिसेव
नादिसकलाविद्याः कलाःशिक्षतु आकाशंविपुलंप्रयातु खगवत्कृ
त्वाप्रयत्नोमहान्नाभाव्यंभवतीहकर्मवशतो भाव्यस्यनाशःकुतः १०१

एतादृशंनानाविधंपरंउत्कृष्टंप्रयत्नं कृत्वापि इहलोके कर्मवशतः यन्नभाव्यंतन्नभवति भ
वितव्यंभवत्येव भाव्यस्यनाशः कुतः प्रयत्नंविनापिभवति १०१

 भीमंवनमिति यस्यनरस्यपूर्वंस्कृतंविपुलंपुष्कलंभवति तस्यभीमंवनंप्रधानंश्रेष्ठंपुरंभ 
 वति सर्वोजनः दुर्जनाअपिस्वजनतांयाति कृत्स्नासमग्राभूः संतः उत्तमाः निधयोरत्नानिचतैः 
पूर्णाभवति १०२ इतिकर्मप्रशंसा लाभः कः गुणिसंगमः असुखंकिंप्राज्ञात्इतर

भीमंवनंभवतितस्यपुरंप्रधानंसर्वोजनःस्वजनतामुपयातितस्य कृत्स्ना
चभूर्भवतिसन्निधिरत्नपूर्णायस्यास्तिपूर्वसुकृतंविपुलंनरस्य १०३ अथ
प्रश्नोत्तरश्लोकाः कोलाभोगुणिसंगमःकिमसुखंप्राज्ञेतरैःसंगतिःकाहा
निःसमयच्युतिर्निपुणताकाधर्मतत्वेरतिः

रामूर्खास्तैः सहसंगतिः हानिः कासमय 
च्युतिः यास्मिन्समयेयत् अवश्यंकर्तव्यमेवतन्नकृतंसमयोगतः सैवहानिः निपुणताज्ञातृताका

याधर्मतत्वेरतिः प्रीतिः शूरः कः विजितानिइंद्रियाणियेन असौप्रियतमाकायानुव्रतापतिव्रताधनं किंविद्यासुखंकिम् अप्रवासगमनंराज्यंकिं आज्ञाफलंयथाज्ञयासर्वेशुभाशुभंभवति सामर्थ्येन

कः शूरोविजितेंद्रियः प्रियतमाकानुव्रताकिंधनं विद्याकिंसुखमप्रवासगमनंरा ज्यंकिमाज्ञाफलम् १०३ मालतीकुसुमस्येवद्वेगतीहमनस्विनः मूर्ध्निवासर्वलोकस्यशीर्यतेवनएववा १०४ अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः परपरिवादनिवृत्तैः क्वचित्क्वचिन्मंडितावसुधा १०५ देवराज्यं १०३ १०४

अप्रियवचनदारिद्रैः अप्रियवचनेषु दरिद्रास्तैः प्रियवचनेषु आढ्याः संपन्नास्तैः स्वदारेषुपरितुष्टैः परापवादात्परनिंदयानिवृत्ता एवमादिभिर्गुणैर्युक्तैः पुरुषैः क्वचित्कचित्स्थलेवसुधामंडिताशोभायमाना १०५

कदर्थितस्य कष्टं प्राप्तस्य धैर्यवृत्तेर्धैर्यवर्तनं यस्य तस्य धैर्यगुणः प्रमार्ष्टुं नाशं प्रापयितुं केनापि न शक्‌-



कदर्थितस्यापि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम् अधोमुखस्या
पि कृतस्य वन्हेर्नाधः शिखा याति कदाचिदेव १०६ कांताकटाक्षविशिखा न द
हंति यस्य चित्तं न निर्दहति कोपकृशानुतापः कर्षंति भूरिविषयाश्च न लो-
भपाशैर्लोकत्रयं जयति कृत्स्नमिदं स धीरः १०७ एकेनापि हि शूरेण पा
दाक्रांतं महीतलम् क्रियते भास्करेणेव परिस्फुरिततेजसा १०८



यते अत्र दृष्टांतः अधोमुखकृतस्य वन्हेः शिखा कदाचित् अपि अधो न याति १०६ १०७ १०८

१०९ सत्यमेवव्रतंतदेवव्यसनंयेषांतेप्रतिज्ञांनत्यजंतिपुनरन्यांनकुर्वंतिकथंभूतांप्रतिज्ञांलज्जा
याःयेगुणास्तेषामोघः समुदायस्तस्यजननीपुनःकथंभूतांस्वांस्वकीयांजननीमिवअत्यंतशुद्ध-



वन्हिस्तस्यजलायतेजलनिधिःकुल्यायतेतत्क्षणात् मेरुःस्वल्पशिलायते
मृगपतिःसद्यःकुरंगायते व्यालोमाल्यगुणायतेविषरसःपीयूषवर्षा
यतेयस्यांगेऽखिललोकवल्लभतमंशीलंसमुन्मीलति १०९ लज्जागुणौ-
घजननींजननीमिवस्वामत्यंतशुद्धहृदयामनुवर्त्तमानां तेजस्विनःसुख
मसूनपिसंत्यजंतिसत्यव्रतव्यसनिनोनपुनःप्रतिज्ञां ११०



हृदयामनुवर्तमानामकुत्सेति अत स्तेजस्विनःसुखमसून्प्राणानपित्यजंति११० माघशु०४गुरु०

